॥ श्रीगुरुस्तुती ॥

यो बभाणाभणन्नेव मुनिभ्यो ब्रह्म निर्द्वयम् ।
दक्षिणामूर्तये तस्मै प्रज्ञानगुरवे नमः ॥ १॥

स्थापितं ब्रह्मनिष्ठेन येनाद्वैतमतं भुवि ।
तस्मै शङ्करसंज्ञाय विज्ञानगुरवे नमः ॥ २॥

अंशावतारः स्कन्दस्य विश्वाचार्यो विदां वरः ।
प्रणम्यते महाभागो रमणो भगवानृषिः ॥ ३॥

दक्षिणामूर्तिसारम्भां शङ्कराचार्यमध्यमाम् ।
रमणाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ ४॥

तिमिराणि न केवलं वचोभिः
    करुणापाङ्गविलोकितैश्च नृणाम् ।
हृदये प्रसरन्ति मर्दयन्तं
    भगवन्तं रमणं गुरुं नमामि ॥ ५॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः कृतिः श्रीगुरुस्तुतिः समाप्ता ॥

अनुष्टुब्वृत्तम् (१-४) । सुबोधितावृत्तम् (५)